# ॥ सन्ध्यास्तोत्रम् ॥

ॐ

अहो देवि महादेवि सन्ध्ये विद्ये सरस्वति ।
अजरे अमरे चैव ब्रह्मयोने नमोऽस्तुते ॥

सन्ध्ये देवि नमोऽस्तुते ॥

देवि त्वं प्राकृतचित्तं पापाक्रान्तमभून्मम ।
तन्निःसारय चित्तान्मे पापं हुं फट् नमोऽस्तुते ॥

दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ।
अमोघा विद्युता चेति मध्ये श्रीः सर्वतोमुखी ॥

नमस्ते देवदेवेशि सर्वतृप्तिकरे परे ।
अमृतानन्दमयि सन्ध्ये देवि तस्यैः नमो नमः ॥

सन्ध्ये देवि नमोऽस्तुते ॥

गुह्यातिगुह्यं भोक्त्रि त्वं सन्ध्ये सरस्वति मुदे ।
अजरे अमरे मातः त्राहि मां भवसागरात् ॥

अपराध सहस्राणि त्वसत्कर्मशतानि च ।
मत्तो जातानि सन्ध्ये त्वं क्षमस्व परमेश्वरि ॥

सन्ध्यादात्री च भोक्त्री च देवी सर्वमिदं जगत् ।
सरस्वती प्रकृतिधात्री सन्ध्ये देवि नमोऽस्तुते ॥

आत्मारूप ज्ञातुं प्राप्तुं ज्ञानं निष्कल्मिषं ऋतम् ।
सन्ध्यास्तोत्रं पठेन्नित्यं सर्वकामार्थ सिद्धये ॥

सन्ध्ये देवि नमोऽस्तुते ॥